| आभ्यन्तरः यत्नः | वर्णाः | सम्बन्धः |
|---|---|---|
| स्पृष्टः | वर्गीयव्यञ्जनानि | एतेषु पवर्गीयानाम् उच्चारणे ओष्ठयोः स्पर्शः भवति। अन्येषाम् उच्चारणे स्थानानां जिह्वायाः च स्पर्शः भवति। स्पर्शः भवति इत्यतः स्पृष्टः यत्नः। |
| ईषत्स्पृष्टः | य,र,ल,व | एतेषाम् उच्चारणे अल्पः (ईषत्) स्पर्शः भवति। अतः एते ईषत्स्पृष्टाः। |
| विवृतः | स्वराः, श,ष,स,ह | एतेषाम् उच्चारणे स्थानानां जिह्वायाः च स्पर्शः न भवति। अतः एते विवृताः। |
| संवृतः | अ (ह्रस्वः) | |